# ॥ अथ मृतपत्नीकस्य अग्न्याधान हिरण्यकेशीय प्रयोगः॥

श्रीगणेशायनमः अथमृतपत्नीकस्यविवाहेण्यसमर्थस्य तदग्न्याधान
1031 प्रयोगोभिधीयते॥ दारकर्मासंभवे आधानमाग्निद्वारापत्नी यजमानोभ
यार्थं तदसंभवे आत्मार्थं तदात्मदाहार्थमेव॥ तथाचापस्तंबः॥ पत्नीयज्ञागम
रणेविधुरत्वंप्रपेदिरे॥ विवाहेण्यसामर्थ्ये स्थोनाश्रमस्यनिवृत्तये॥ आत्मार्थमे
व मनीनांपुनःसंग्रहस्यपूर्ववत्॥ त्रिकांडमंडनः॥ स्त्रीमात्रस्य विशेषेणैद्ध्याधान्यैर्वै
दिकाग्निभिः॥ विवाहारभ्यते यद्वाधानमेवास्तिचेद्ध्रुवः॥ एकाकीयोदधीताग्नी
न्विवाहश्चेन सिध्यति॥ निःसेष्ययागमयणावाग्निहोत्रकर्मास्यनेतरत्॥ एका
धानपक्षस्तुकर्मदीपे निराकृतः॥ जुह्वंसन्न्येमृतःस्त्रीकः कुशपत्नीसमन्वितः॥
जुहोतिनमृतस्त्रीकः एकाकीपूर्ववान्हिषु॥ भरद्वाजमतंचैतत्कर्मदीपेनिराकृतं॥ अ
तएवमृतःस्त्रीकःस्याधा नं निश्चितबुधैः॥ अन्यत्र अस्मिन्विषये पत्न्याः कैश्चित्प्राधा
न्यं कैश्चिदंगं विवक्षितं॥ तत्रप्राधान्ये विवक्षिते तन्मते उभयोरेकस्य वा अपूर्वाधा
नमेवसारस्वतहोमसोमोऽपादयश्चपुनर्भवंति॥ व्यासज्यवृत्तपूर्वस्यैकस्य मा
शोनष्टहातन्मतएवोक्तं॥ मंडनकृतातुल्य एवाधिकारस्य रूपसौरूभयोर्मिसर्थः

श्यास्त्रीमरणे तु स्त्रियापि लौकिकाग्नीमथिलापैत्मेध विधिनापात्रचयवर्जं
दहेत्॥ स्त्रीपूर्वंमृतौ तु विधुराधानं कर्तव्यं॥ तद्द्विविधं॥ पत्नीप्रधानं पत्न्यंगं च
पत्नीप्रधानं अपत्नीकस्याधानं न भवति॥ अंगपक्षे तु सर्वेषां मते कर्तव्यमिति
सिद्धं॥ अत एवोज्वलायां॥ पत्न्यंगपक्ष एव स्थापितः॥ शिष्टाचारोप्येवमेव॥ त
थैव॥ बोधायनीयसूत्र म सूत्ररुद्रदत्तीयभाष्ये तदभिप्रायेणैव॥ तदा कुरपत्नी
कोप्यग्निहोत्रमाहरेत्॥ इति तैत्तिरीयब्राह्मणाच्च तासर्वपत्नीनामंगहं प्रधा
नत्वमिति सिद्धं॥ तस्मात्कुशादिपत्नीपरिग्रहः कार्यः॥ अथपत्नीपरिग्रहविधिः
तत्र भरद्वाजः॥ पत्न्याभावे कुशमयी यद्वा हैमीं च दारुजां॥ पत्न्याप्रतिकृतिं कृ
त्वा परिगृह्य यथाविधिः॥ पृष्टोदिवि विधानेन लौकिकाग्निं प्रगृह्य च॥ प्रण
वेन लौकिकाग्निमानीय श्रोत्रियगृहात्॥ पृष्टोदिवि पृष्टो इति अन्वग्निरुष
सापि च॥ द्वाभ्यां प्रतिष्ठाप्य हृन्हि कुंडे वा स्थंडिलेपि वा॥ संमुखीकरणं कृत्वा॥
२ चतुर्थ्यपि समिंधनं॥ तत्सवितुस्ताः सवितुर्घ्यानो देवसवितः॥ विश्वा

निदेव सवितर्मन्त्रैरूयसमिंधनं ॥ पाणिग्रह विधानेन यथा गृह्यं समाचरेत् ॥ नि
त्यौपासनवज्जुला अरण्याहरणादिकं ॥ अग्न्याधानमविकृतं यथापूर्वं समाचरेत्
पत्नीस्यात्तैः समासाद्यकुर्याद्दिप्रकृतिः सदा ॥ पत्नीकर्माणि सर्वाणि तत्सहाय वि
योजयेत् ॥ पत्नी विषय कान्मन्त्रान्यजमानो जपेत्सदा ॥ निर्वापाज्यवेक्षणं तु
संपत्न्या कृतयस्तथा पुनश्चैव वा धिष्ण्यश्रयणं त्रीण्येतान्नैववर्जयेत् ॥ आधानम
ग्निहोत्रं च दर्शश्चाग्रयणं पशुः ॥ चातुर्मास्यानि सोमश्च तथा सौत्रामणी
पुनः ॥ एतेससहा विर्यागास्तद्धिकारश्च सर्वशः ॥ नित्यनैमित्तिका वापि पवित्रेष्टि
मृगादयः ॥ नक्षत्रेष्ट्यादि सत्राणां सर्वमावर्त्तयेत्पुनः ॥ कृतमप्यकृतं वापि पत्न्यं
गवेसमाचरेत् ॥ पत्नी प्रधानो विषयेनापूर्वं विनियोजयेत् ॥ पत्नी प्रधान पक्षेतु
प्रवासं नैवकुर्वते ॥ प्राप्तेतु संकटे कुर्यात् प्रवासस्या र णीसह ॥ अन्यत्र ॥ अंग
पक्षेप्रवासस्तु अपूर्वाधानवच्चरेत् ॥ गार्हपत्यसमीपस्थां प्रतिमामवलोकयेत् ॥
उपस्थानं ततः कृत्वा मासमेकं सपत्निकः ॥ प्रवासे द्विधुरश्चापि दिनमासमितं सदा ॥
वर्षत्रयनपर्यंतं सर्वथैव विवर्जयेत् ॥ इति स्मृत पत्नी परिग्रहोपयुक्त विचारः ॥

॥ अथपत्नीप्रधानपक्षे अनुष्ठानविशेष उच्यते ॥ मृतपत्नीकयागादौ सर्वस्त्रीक
मंत्रलुप्यते ॥ नान्येन केनचित्कार्यं मृतायां कर्म किंचन ॥ पत्नीकर्तृतियः कश्चिदिह
दासीपिनष्टिच ॥ सपत्नीयाकृतिस्तत्र सर्वथैवचलुप्यते ॥ अन्यच्च ॥ अस्त्रीकस्य
हविःपाके नियतः पूर्वपादके ॥ सर्वथावापरे वन्हौ वितिकात्यायनोब्रवीत् ॥ योक्त्र
वर्जंपात्रासादनं ॥ स्रुचश्च संमृष्ट्याज्ये नोदहितिप्रैषः ॥ आज्यासादने याज्ञ्याज्यावे
क्षणांतं लोपः ॥ तेजोनुप्रहीष्यामिति प्रातिपद्यते ॥ नित्याश्च सारः ॥ पत्नीसंयाजा
॥ नकाम्या इति ॥ संपत्नीयाकृतिर्लुप्यते ॥ हविःश्रपणं च यूपस्यादानादिह विश्र
पणं आहवनीय एव कुर्यात् ॥ नगार्हपत्ये ॥ प्रवहन्वाज्यो द्वासनमाहवनीयश्राप
णः ॥ ॐ उदुर्णम्रदसं स्वासस्था देवभ्य इति न पृदस्तरणानंतरं तस्मिन्नेव का
ले हविरुद्वासनं ॥ ततोऽध्यासमिध्ममादायेत्यादिप्रयोगः ॥ बोधायनादिनां
बर्हिः श्रपणविषये आहवनीयस्योत्तरतः ॥ कपालोपधानादि ॥ हविश्रपणं
तं कुर्यादित्सु वचनं ॥ किंतु आदौ बर्हिरास्तरणविधानात् ॥ आस्पेलेपनिन
यनादि यथाप्रकृतिः ॥ ह… र्वापिहविष्यादायाग्रेणाह

वनीयं पर्याहृत्य सं दक्षिणं द्वाराज चनेन गार्हपत्यं पर्याहृत्य सुचं पश्चादासादय
तिव्याहृतिभिः यथाप्रकृति मन्थनम्॥ एवं मुद्यास्तमयोः॥ सीमातिक्रमणं च अ
ग्नीन्विहाय यजमानो न कुर्यात्॥ अपत्नी समारोहणं प्रवरोहणं च स्वयमे
व कुर्यात्॥ अग्नीन्विहाय न प्रवसेत्॥ आपत्स्वयमे [illegible] बाध्यं॥ अथ पत्न्यंगप
क्षेप्रयोगः॥ पत्न्यभावे कुशमयीं हेममयीं दारुमयीं वा पत्नीप्रतिष्ठाति विधाया
चम्य प्राणानायम्य देशकालौ स्मृत्वाऽमृतस्त्रीकत्वप्राप्तये विछिन्नोपासन
संधानार्थं श्रुत्यादिविविधानेनाग्निसंधानं पत्नीपरिग्रहं चाहं करिष्ये॥ तदंग
गणपतिपूजादि वृद्धिश्राद्धांतं कृत्वा श्रोत्रियगृहादग्निमाहृत्य श्रुष्टोदिव्यन
ग्निरूपसेति द्वाभ्यामायतने संस्थाप्य संमुखीकृत्य परिसमुह्य परिस्तीर्य
पर्युक्ष्यार्चयित्वा तत्स्वः शमीमयीघृताक्ता आदा य॥ तत्सवितु रा॥ ता०
सवितुः गा० स्वाहा॥ आद्यानो देवसवितः॥ व स्वाहा॥ विश्वानि दे० स्वाहा॥ स
वित्रे सवित्र इदं न ममेति त्यागः॥ पुनः परिषिच्य परिस्तरणानि विसृज्य॥ कुशादि
२ प्रति २ [illegible]मीगृहणार्थं आचार्यं कृत्वा संपूज्य॥ आचार्यः प्रतिमायां पंचगव्यं पंचामृतस्ना
नादीनि अग्न्युत्तारणपूर्वकं कृत्वा प्राणप्रतिष्ठां कुर्यात्॥ ततो यजमानः सुलग्ने

नाम

३ सर्वत्र ३



सगृह्योक्तविधिना ० न विजरषां कृत

स्वगृह्यविधिनापाणिगृहमीक्षणंच कृत्वा लाजाहोमव्यतिरिक्तं विवाहहोमं सं
ध्यानाग्नौ प्रधानं कृत्वा विधिवत् अहरहं औपासनं कुर्यात्॥ विधिवदग्न्याधानं
तदुक्तकाले पुनराधानवदादिसाहुतिमतिरिक्तं सर्वाधानं कुर्यात्॥ नार्थ्याधानं
विधुरस्य नोपासनकर्मविधानात्॥ पत्नीसंबंधकर्माणि सर्वाणि कुर्यात्॥आ
ज्य निर्वाज्यवेक्षणं पुनराधिश्रपणं संपत्नीयाहुति व्यतिरिक्तं सर्वं कुर्यात्॥
पत्नीसंबंधमंत्रान्यजमानः स्वायतनए वजपेत्॥ एवमग्निहोत्रेपि पत्नीकर्माणि
कृतान्यकृतानि सर्वाणि कुर्यात्॥ अष्टकाद्यर्थं ब्रह्मौदनाद्यर्थं वा गृह्याग्न्यपेक्षा
या पृष्ठ्योदिविविधानेन सर्वाधानवत् संधानं कृत्वा प्रयोजनं कार्यं॥ कर्मसमा
सौ स्मार्त्ताग्निपरित्यागः॥ नौपासनहोमो नापि स्थालीपाको॥ प्रवासविषये
दिनमासप्रवासं कुर्यात्॥ न ऋतुलयनं संवत्सरात्मका पि समारोपप्रत्यवरोहण
स्वयमेव कुर्यात्॥ पुत्रस्नुषादिसंबंधव्यतिरिक्तकृत परपाकेन भोजयेत्॥
कुशादिप्रतिमात्सापे प्रागुक्त विधिना विनियोगं कृत्वा पुनर्नवा निरूप्याद्य पृ
८ ष्ठो देवीयनिं संध्याय उत्सर्गेष्टया मन्वीनुसृज्य पुनराद्धीत पूर्ववत्॥

सप्तहविर्यागान्कृताकृतान्यपि पुनरावर्त्तयेदित्युक्तत्वान्न तदिति ग्रंथकाराणामाशयः॥
किंतु नापूर्वं विनियोजयेदिति साधारणबाधात्॥ अत एव भरद्वाजः॥ ब्रह्मचारी च
विधुरो [redacted] विधवा यास्तथैव च॥ काम्यकर्मणि नो यातं चतुर्थाश्रमवासिनः॥ श्रौ
तस्मार्त्तहविर्यागा नियमेनैमित्तिकादयः॥ प्रतिमाध्यानविषयेनापूर्वं काम्यमाचरेत्॥
इति काम्यबाधात्सब्रह्मचारीनां नापूर्वं विनियोजयेदिति सिद्धं॥ विनाश्रमनिवृत्त्यर्थमा
धानं हि चतुर्थकं॥ प्रकृते धुंढिराजेन विधुरान्हितकाम्यया॥ इति लल्लापाख्यधुं
ढिराजकृतविधुराधानकृतप्रयोगः॥ ॥ ॥ ॥ ॥
अथोपयुक्तवचनानि॥ त्रिकांडमंडणः॥ सौवर्णी कुशपत्नीं च पत्न्यभावेग्नि
होत्रिणः॥ पत्युः प्रति निधिं कुशपत्नीं नैवं समाचरेत्॥ मृतभार्यस्य चैका
किनोग्निहोत्रस्य जुहुतः॥ पत्नीमंत्रां जपेत्स्वामी जीवंतीं चेन्न शंकुयात्॥ प्रसू
या [redacted]या मशक्तौ मपेतायां च केचन॥ रजस्वलाविधिं प्राहुर्मैथुनाह्नानवर्जितः॥ आ
ग्निनाग्निर्मृतस्त्रीकः आदध्यानान्यया सह॥ कृतारंभादिधर्मोपि कृतसोमम
खोपि वा॥ आहिताग्नेर्मृतस्त्रीकस्याधानं सन्न शिष्यते॥ सन्यासं वारयेय

न्यथा यावज्जीवाग्निहोत्रिणः॥ पृष्ठोदिविविधानेन पुनरग्नीन्समाविशेत्॥ प
त्न्याप्रतिकृतिं कृत्वा कुशैर्हेमीं च दारुजं॥ पत्न्याभावे तु कर्तव्या प्रतिग्रहस्य यथाविधि॥ विष्णुलं दोषः परिशिष्टात्॥ मृतयामपि भार्यायां वैदिकाग्निं न संत्यजेत्
उपाधिनापि तत्कर्म यावज्जीवं समाचरेत्॥ उपाधिहोम कुशपत्न्यादि विषयः॥ अ
न्ये कुशमयीपत्नीं कृत्वा तु गृहमेधिनः॥ अग्निहोत्रमुपासते यावज्जीवमनुव्रतीः
इति स्मृत्यंतरात्॥ कात्यायनेपि॥ रामोपि कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीं
यजेद्बहुविधैर्यज्ञैः सह भ्रातृभिरुच्यते॥ इति विधुराधान समासः॥ ॥ ॥
अथोत्सर्गेष्टिः॥ तत्र जाबालश्रुतिः॥ तद्धैके प्राजापत्यामेवेष्टिं कुर्यादिति
अत्र वाक्यशेषेग्नीरिति बहुवचनश्रवणादाहिताग्निविषयमेवैतदिति के
चित्॥ विश्वेश्वरीये॥ अथवा वैश्वानरीयेष्टिं कुर्यात्॥ अग्नये वैश्वानराय द्वादश
कपालं॥ पुरोडाशं निर्वपति प्राजापत्यं चरुं वैष्णवं नवकपालं चेति॥ तत्रैवोदा
हृतश्रुत्यंतरात्॥ अत्र विशेषो बौधायनोक्तः॥ देवयजनोल्लेखनप्रभृत्याग्नि



८

मुखांतं कृत्वा पक्वा जुहोति ॥ वैश्वानराय प्रति वेदयामह इति पुरोनुवाक्यामन्
च्य वैश्वानरः पवयान्नः पवित्रैरिति याज्यया जुहोति ॥ अथाज्याहुतिं जुहोति ॥
वैश्वानर उ सेस्यनुप्छं दसं ॥ अग्नये स्वाहेति च ॥ अथैनमुपतिष्ठते ॥ सहस्रशी
र्षेत्यनुवाकेन ॥ स्वि  ष्टकृत्प्रभृति सिद्धमाधेनुवरप्रदानात् ॥ अथाग्नेर्णा
ग्निं दर्भस्तंबेषु हुतशेषं निदधाति ॥ सर्वो वै रुद्रो विश्वं भूतमिति द्वाभ्यामुत्सृज
त्याग्न ॥ आयुर्दा अग्ने हविष इति ॥ अथ पक्वादुपादाय प्रक्षाल्य प्राश्नाति ॥
सहस्रशीर्षेत्यनुवाकेन ॥ प्राश्याचम्यात्मानमभिमृशति ॥ ॐ ब्रह्म सेतेनानु
वाकेन ॥ अथाग्नि द्रव्यमस्त्रौ प्रक्षिप्यात्मन्यग्नीन्समारोपयेत् ॥ या ते अग्ने
यज्ञिया तनूरिति ॥ पात्रप्रतिपत्तिमाह दत्तात्रेयः ॥ मृन्मयानि अश्ममया
नि वाप्सु जुहोति ॥ गुरवे तैजसादि दद्यादिति ॥ काष्ठपात्राण्याहवनीये प्रक्षि
प्यारणी गार्हपत्ये प्रक्षिप्य ॥ उलूखल मुसले दक्षिणाग्नौ निक्षिपेदिमुक्तं
यमस्मृताविति ॥ इति उत्सर्गेष्टि विधिः ॥ ॥ ॥ ॥ ॥ ॥
शके १७४८ तारणसंवत्सरे मार्गशीर्ष शुक्लपंचमि गुरु

श्रीगणेशायनमः॥ अथातोधर्मजिज्ञासकेज्ञांगतोदूर्ध्वमपत्नीकउच्छिनाग्नि
करनग्निकोवाप्रवासीब्रम्हचारिन्वावाग्निरितिग्रामाग्निमाहृत्यपृष्टोदिवीस्य
धिष्ठाप्यत्रिभिश्चसावित्रीप्रज्वाल्यतार्थंसवितुतत्सवितुर्विश्वानिदेवसवितरी
तिपूर्ववदृष्ट्वतेहुत्वापाकंपचेनत्रवैश्वदेवंब्रम्हणेप्रजापतयेगृह्याभ्यःकश्य
पायानुमतयेविश्वेभ्योदेवेभ्योअग्नयेस्विष्टकृतइत्युपस्थ्यपूर्ववद्कर्मवैकृते
नवृथापाकोभवतिनवृथापाकंपचेत्नवृथापाकमश्रीयात्अत्रपिंडपितृय
शपक्षाद्याग्रयणानिकुर्यात्॥इतिप्रवोच्छिन्नाग्निभोजनविधिः॥ ॥ ॥
अथनिमित्तासुनराधानोच्यते॥पुनराधानेपूर्वैवियोनिपूर्वावृत्यापुनराधानम
र्हति॥प्रथमाधानेगुरुशुक्रयोरस्तमानादिवर्जेपुनराइतिर्नभवतिइतिविशेषः
प्रायश्चित्तप्रायश्चित्त।वादिपूर्वकंसायंप्रातर्होमपक्षादिपिंडपितृयज्ञादिसमझान
यावदुक्तकालेगणपतिपूजनस्वस्तिपुण्याहवाचनपूर्वकंनंदांदिश्राद्ध॥पुनरा
धानेइतिभर्तृयज्ञः॥ब्रम्हादिऋत्विकवर्णनंसर्वमाधानवत्॥तथाचपूर्वारणि
नष्टाचेतिआवसथ्येराहः॥आहितवाग्नेआहवनीयेनिविशेषः॥अरणिद्वयमध्येए
कारणिनष्टायवासंतक्षीणाभवतिनदातस्याररण्यापुपुत्रकंनिष्क्रास्यतस्यैवमंथनं
६

राणि

कार्यं॥ अरणिः सर्वांगे मंथनं कार्यमिति देवयाज्ञिकः॥ अथारणिदाहः॥ तथा च का
त्यायनः॥ अरण्योः क्षयनाशाग्निदाहेष्वग्निं समाहितः॥ पालयेदुपशांतोऽस्मिन् पुनराधा
नमर्हति॥१॥ अरण्ये दग्धयोर्वापि नष्टयोः क्षीणयोस्तथा॥ आहृत्यान्ये समारोप्य
पुनस्तत्रैव मथ्यते॥२॥ अरण्योरन्यमव्यंग यावत्तिष्ठति पूर्वयोः न तावत्पुनराधान
मन्यारण्योर्विधीयते॥३॥ तत्रारणिगते वन्हौ नष्टे स्यात्पुनराहितः॥ इतरेण्यां पुनिमित्ते
षु अग्न्याधेयं प्रवक्ष्यते॥ इति गदाधरेणोक्तं॥ तथा च बौधायनः॥ एकारण्यां विनष्टा
यामस्ति चेदितरारणिः॥ तां छित्वा मंथनं प्रोक्तं॥ भाष्ये बौधायनीयके॥ कात्यायनः॥
अरणिमथनाशक्तौ जंतुभिर्मथनेन वा स्यामां च दरणी नूने प्रात्वेरग्न्युक्तलक्षणे
॥ ध्वोभ्रूतेन ष्टेतस्मैर्तिस्मै इ जिर्णारणि ह्यं॥ शाकले कृत्वा ते छित्वा वन्हौ निक्षि
प्य दीपयेत्॥ ततो दक्षिणहस्तेन नवतनामुत्तरारणिं॥ गृहीत्वा सव्यहस्तेन गृण्हीयात्पूर्व
मरणिं॥ ते उभे अरणी तत्र दीप्ते ग्नौ धारयन् जपेत्॥ उद्बुध्यस्वाग्ने प्रत्येतत्॥ अयं ते यो
निरित्यपि॥ इति कात्यायनोक्तं॥ तथा च हरिहरः॥ असमारोपिते॥ यास्तु एकतर
विनाशे द्वितीयां छित्वा मंथनक्षया॥ प्रतिपत्तिरावसथ्यादाहः॥ तथा च रेणुकारोप॥

यदारण्योर्जंतुभक्षेणेन मंथनेन वा मंथवामंथनायोग्ये ऽभवनस्तदारणीच्छि
त्वाशकलान्येकीकृत्याग्निं प्रज्वाल्य तद्वह्निं निक्षिपेत्॥ ततो नूतनारणिमुत्तरां द
क्षिणहस्ते गृहीत्वाधरारणीं सव्यहस्तेन प्रदीप्ताग्नौ उद्बुध्यस्वायं ते योनिरिति
मंत्राभ्यां मंथनयंत्रे प्रतप्याग्निं मथित्वा पंचभू संस्कार पूर्वकं स्थाने निधाय पूर्णा
हुतिवदाज्यं संस्कृत्यानादिष्टहोमं कुर्यात्॥ अथ समारोपमंत्रः॥ उद्बुध्यस्वाग्ने
प्रविशस्व योनिमन्या देवयज्या ये वोढवो जातवेदः॥ अरण्योररणी अनुसंक्रमस्व
जीर्णां तनुमजीर्णयानि एधंदस्व॥ अयं ते योनि एताभ्यां मंत्राभ्यां समारोपः॥
रस्यारणिराह॥ ते होचुः पुरोक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुध्वं शामीम
यीमधरारणिं। स यस्ततोग्निर्जनिता। स एव स भवितेति श्रुतेः॥१७॥ ते होचुः
परोक्षमिव वा एतदाश्वत्थीमेवोत्तरारणिं कुरुध्वमाश्वत्थीमधरारणिं। स यस्त
तोग्निर्जनिता स एव स भवितेति॥१८॥ स आश्वत्थीमेवोत्तरारणिं चक्रे।
७ आश्वत्थीमधरारणिं। स यस्ततोग्निर्जज्ञे स एव स आस तेनेष्ट्वा गंधर्वा

णामेको भवति ॥१७॥ ग्रामकर्णं ॥३॥ एकादशी अल्पाध्याई कांडे प्रपाठक:
तिस्रः प्रजापतिर्हि चातुर्मास्ये रात्मानं विदधे ॥ ॥ ॥ ॥ ॥ ॥ ॥
अथ पुनराधाने प्रमादे क्रम: ॥ तत्र प्रमादात्रिरात्रम ग्निसागे प्राणायामशतं एक
विंशतिरात्रे एकदिनोपवास: ॥ मासद्वये त्रिरात्रोपप वास: ॥ अब्दे प्राजापत्य
कृच्छ्र: ॥ एवं सागानुसारेण प्रायश्चित्तं कृत्वा पुनराधानं ॥ अलस्यादिना बुद्धि
पूर्वकमग्नि यागतकालानुसारेण वनादि प्रायश्चित्तं ॥ द्विवर्षपर्यंतं चांद्रायणं ॥ अ
त ऊर्ध्वमब्दकृच्छ्रं धनिनां गोदानं चेति ॥ प्रयोगपारिजाते ॥ तथा च कारिकायां कर्म
प्रदीपे प्रायश्चित्तोक्तं ॥ मासद्वयं तु यो वन्हिं संजत् एवं समाचरेत् ॥ नास्ति कृच्छ्र
मेकं तु होमद्वयं ददाति च ॥ तथा च भारद्वाज गृह्ये यावत्कालं न होमी स्यात् तावद्द्रव्यमन्वा
यत: ॥ तद्दानं चैव विप्रेभ्यो यथा होम तथैव स: ॥ जातुकर्ण्योपि ॥ अतीतकालं जुहुया
दग्नौ विप्रायवा स्वयं ॥ द्वादश विंदि विप्रे कृत्वाधानं पुनर्द्विज: ॥ चतुष्टये तु संपूर्णे
मासानां तु हुताशने ॥ स कृच्छ्रं तु कुर्वीत ततः पापात्प्रमुच्यते ॥ षण्मास सागेप

सम्यक् २

राकं॥ यथाहोशनेः॥ षण्मासं त्यजते यो वै पराकं समाचरेत्॥ ऊर्ध्वं पयोव्रतं कुर्या
त् मासमेकं समाहितः॥ वर्षपर्यंतमथवा मुनयः शंसितव्रताः॥ स्कांदे विशेषः॥ कु
तान्नूत्नं तु यो विप्रः प्रमादात्यजति प्रभो॥ प्राणायामशतं कुर्यात्॥ उपवासमथापि
चेति॥ स्मृत्यंतरेपि॥ अलस्येन यदा वह्निं द्वादशाहं त्यजेद्भ्रमात्॥ त्रिरात्रमुपवासं
चचरेत्सोपि विशुध्यति॥ तत्रप्रयोगः॥ एवं कालवि लंब संकल्पपूर्वकं प्रा
यश्चित्तं कृत्वा पुनराधानं॥ यत्र तु येन केन चिन्निमित्तेनाग्निनाशः कालविलंब
श्च नास्ति॥ तत्र प्रायश्चित्तमकृत्वैव पुनराधानं॥ नित्यक्रियां विधाय देशकालौ
संकीर्त्य एतावंतं कालमावसथ्याग्नि विच्छेदजनित प्रत्यवायपरिहारार्थं एतत्प्राय
श्चित्तं अमुकप्रत्याम्नायेनाहं करिष्य इति संकल्प्य॥ लुप्तानां सायंप्रात[illegible]
नां तुल्यादि द्रव्यं ब्राह्मणाय संप्रददे इति होमं दद्यात्॥ तथा दर्शपौर्णमासस
स्थालीपाकानां संपत्तिपर्याप्तं व्रीह्यादि द्रव्यमाज्यसहितं ब्राह्मणाय संप्रददे॥
ततः शुचौ काले शुचौ काले शुचिराचांतः प्राणानायम्य देशकालौ स्मृत्वा
८ श्रीपरमेश्वरप्रीत्यर्थं विच्छिन्नावसथ्यस्य पुनराधानं करिष्ये इति संकल्प्य॥

निर्विघ्नार्थं गणपतिपूजन स्वस्तिपुण्याहवाचन मातृकापूजनं करिष्ये॥ नांदिश्राद्धाभावः॥ ततोवैकल्पिकावधारणं॥ पूर्वसंपादितएवारणीतान्येवपात्राणिन त्वन्यानि॥ अरणीमानं निर्दिष्टाः॥ पूजनं स्वीकारः॥ स्वशेषं पंचभूसंस्कारान्कृत्वाआएतवस्त्रेणाकुंडाच्छादनमितियाज्ञिकसंप्रदायः॥ मंथनाग्निस्थापनं॥ ऋष्यादिस्मरणं॥ देवताभिध्यानं॥ ब्रह्मोपवेश॥ नांदिब्राह्मणतर्पणांतं सर्वमाधानवत्॥ ईदृशं पुनराधानस्वरूपं॥ अत्र क्षौरादिनियमोनभवति॥ प्रायश्चित्तं द्रव्यद्वाराकार्यं॥ इतिनिमित्तापुनराधानप्रयोगः॥ ॥ ॥

श्रीगणेशायनमः॥ विघ्नध्वंनमस्कृत्य पितरौगुरुंमुस्तुतं॥ गौरसितापतिविप्राश्च ...नाधानविधिक्रमं॥ तत्रप्राप्ताधिकारोधीतवेदः ब्राह्मणोऽग्नीआदधीत॥ यस्यविद्यमानाः पितृज्येष्ठभ्रातरः॥ आहिताग्नयस्तेभ्योगृहीतदायः कृतदारः कृतावसथ्य इतिप्राप्ताधिकार उच्यते॥ तस्यतादृशस्याधिकारिणः केनचिद्विघ्नाद्दिना असंभवे श्रौताधानमकुर्वतः संवत्सरेऽतीते आत्मशुद्ध्यर्थं कृच्छ्रत्रयप्रत्याम्नायभूतं प्रायश्चित्तंवदितम्॥ तादृशविघ्नाद्यसंभवेहेत

भावे आलस्यादिना शरीरक्लेशभयादाधानं मकुर्वीत॥ संवत्सरे व्यतीते कृच्छ्र
सप्तकं त्रैमासिकस्थाने तथा प्रत्याम्नायश्रुतं प्रायश्चित्तं वेदितव्यं। संवत्सरा
(ऽ)र्वं प्रसक्तमास त्रिरात्र प्रत्याम्नायभूतं आत्मशुद्धिकारकं प्रायश्चित्तं वेदितव्यं २
(त्या)द्यनेककृच्छ्रातिकृच्छ्रप्रायश्चित्तं गोभूहिरण्यद्विज तर्पण जपहोमादिद्वारा
यथाशक्त्यांगीकृत तपसे आत्मनः सपत्नीकस्य शुद्धिं संपा अयथोचिते तिथिनक्षत्र
तुं मासानुरूपे कालेऽग्नीनादधीत तत्र वसंतादिग्रहणं॥ ब्रम्हक्षत्रियविशां ऋतवश्र
सा विहिताः॥ तत्काम्याग्निहोत्रविषयं॥ नित्याधाने नियमो नास्ति तदपि श्रुति
दर्शनात्॥ यदहरैवेति॥ एवमग्न्याधेयस्य कालत्रयं विहितमस्ति॥ आमावस्या कृ
त्तिकादिनक्षत्रकाम्यादिकं पत्रये पूर्वादिने उपक्रमः॥ एतदाधानं त्रिविधमुक्तं॥
एवं पूर्णकृत्यं तं द्वितीयमग्निहोत्रहोमांतं॥ तृतीयमिष्ट्यंतं॥ मुख्यपक्षे दृश्यते॥ त
त्राधानं॥ यथा पौर्णमास आधानानंतरो भवत्यथवा दर्शेष्टिः आधानानंतरो भ
वति तथा विधेयं॥ आद्यपक्षः सनक्षत्रपक्षे आधानानंतरं त्रिरात्रमग्निधारणं य
१ दुक्तं तस्य त्रिरात्रस्यांते पौर्णिमाख्यं अमावास्याख्यं वा पर्व यथा पतति तथा मुहू

तं विधेयं॥ अनेन उभयेपक्षयोर्दर्शाभ्यामग्न्याधानं न क्षत्रं भवति॥ तदाधान मुहूर्तं ज्ञा
तव्यं सोमम सहिताधाने दर्शाभ्यां मुहूर्तं स्यात् तदा त्रिरात्र मग्निधारणं न संभवति॥ तदा
सोमाधानं पितृ पितामह सोमाय संभवति॥ इत्याधान मुहूर्त विचारः॥ अथ गन्याधाने वर्ज
कालाः॥ आषाढ पुष्य कार्तिक भाद्रपद मासाः पंचमो धिकश्च॥ गुरुशुक्रयोरस्तमनं वर्ज
याम्यायने च॥ याम्यायन सम मग्न वर्जं॥ इति स्मृतिभ्यां नि वीहितं॥ एवं मुहूर्ताद्यपूर्व
प्रायश्चित्तं होमात्संध्यानार्थमेकां गां पयस्विनीं ब्राह्मणाय दद्यात्॥ आधाने निर्णीजनो
तं॥ वैश्वदेवं कृत्वा मातृपूजनं नांदीश्राद्धं करोति॥ अमावास्यायां चेदाधानं तदा नांदी
श्राद्धानंतरं आवसथ्याग्नौ पिंडपितृयज्ञः॥ ततो दर्शश्राद्धं करोति॥ गोमयादिना उ
पलिप्तायां भूमौ अक्षतामयं मंडलं विधाय चतुर्ण ऋत्विजां साधनं च चरणं सा
लनं विधाय॥ देशकालौ स्मृत्वा॰ तत्सपरमेश्वरप्रीतये नित्यनैमित्तिक काम्यक
र्मानुष्ठाना सिध्यर्थं अग्न्याधयाख्यं कर्माहं करिष्ये॥ त दंगत्वेन गणपति पूजनं॥
स्वस्ति पुण्याहवाचनं मातृकापूजनं वसोर्धारा नांदीश्राद्धांतं कृत्वा॥ ततः ऋत्विकूम
पदेशः॥ प्राङ्मुखाः ऋत्विजः उदङ्मुखो यजमानः इति सोमेदेवः॥ ऋत्विजो दक्षिणं
जान्वालभ्य अमुकगोत्रोत्पन्नः॥ अमुकप्रवरान्वितः॥ अमुकशर्मा अहं नियं

राम

नैमित्तिककाम्यकर्मानुष्ठानसिध्यर्थं श्रौतावनी अमाधारये॥ अमुकगोत्रोम
नामुकप्रवरान्वित अमुकशाखाध्यायिन् तत्रमेव ब्रम्हा भव होता भव॥ अध्व
र्युं भव॥ अग्नी भव॥ भवामीति सर्वे पाद्यं इति वचनं॥ ॐ द्विजावृतामधुपर्कमा
हरेत्॥ यजमानेन सह ऋत्विज: अग्न्यगारे कुर्वीत॥ गार्हपत्यागारे प्रागग्रे रांउग्रं
रांवा॥ आहवनीयागारे नियमेन प्रागग्रेरांकुशं॥ यजमानपत्न्योसहतत्र
स्त्रपरिधानं॥ ततोध्वर्यु:॥ गार्हपत्यस्थाने पंचभूसंस्कारान् कृत्वा॥ निर्मथ्याप्यादि
ध्याति वैश्यकुलं अंबरीष महानसाद्वा॥ मंथनपक्षे अर्थासिद्धिका छेगिर्मथि
त्वा स्थापनं॥ यद्वा पभ्रातर अंगी कृत्वा साग्निस्थापनं॥ तथ्यथा॥ बहुपारो वैश्य
गृहाद ग्नि माहृत्य स्थापयेत्॥ अथवा॥ अंबरीषगृहाद्वा क्षुगृहाद्वा यद्वा ब्रा
म्हगृहाद ग्नि माहृत्य स्थापनं करोति॥ तदा सपत्नीकयजमानान्वारब्धोध्वर्युः॥
सम्मदाभसमुत्तेनकपरिपात्रेण च महानसाग्निं मंगलवाद्यघोषपुर: सरमानीय
गार्हपत्यस्थाने स्थापयत्॥ ततो यजमानपत्न्योर्दिवा हविष्य भोजनं रात्रौवा॥ दिवाभो
१० जनं कृत्वा पुन: रछया॥ रात्रौ भोजनं कार्यमित्यर्थ:॥ अथ अस्तमयसमीपे आ

एवनीयागार्हस्यपुरस्तात्प्राङ्मुखोपविष्टो सपत्नीको यजमानो जपति ॥ ॐ देवाः पित
रः पितरो देवा यो ऽहमस्मि स सन्यजे ॥ यस्याहमस्मि न तमन्तरयामि स्वं मऽइष्टं स्व
श्रान्तं स्वं हुतमस्तु ॥ ततो यजमानः ॥ आहवनीयागारस्य पूर्वद्वारेण प्रविश्य
गार्हपत्यस्य पश्चादुपविशति ॥ पत्नी गार्हपत्यस्य द  क्षिणद्वारेण प्रविश्य य
जमानदक्षिणतः उपविशति ॥ ततोध्वर्युः ॥ पूर्वोक्तलक्षणे उभय अरणी आदाय स
पत्नीकाय यजमानाय प्रयच्छति ॥ श्रौतकर्मभूतस्याग्नेर्योनिरूपे अरणी प्रतिगृह्य
तां ॥ यजमानः अवाभ्यां परिगृहीते इस्या  प्रतिगृह्णाति पत्न्यनेकत्वे अस्माभिः
परिगृहीते इति ततोध्वर्युर्निर्दिशति ॥ तत्रेयमधरा इयमुत्तरा ॥ उत्तरा यजमानो गृ
ह्णीयात् पत्न्यनेकत्वे सर्वा अपिक्रमेण अधरारणीं स्पृशति ॥ इमानि स्रुक्स्रुवा
दीनि पात्राणि ॥ यजमानो हस्तेन स्पृशति ॥ मयैतानि परिगृहीतानि ॥ ततः अर
णीमानं ॥ चतुर्विंशांगुलादि ॥ मूर्द्धाक्षिकर्णवक्त्राणि कंधरा चापि पंचमी ॥
अंगुष्ठमात्राण्येतानि ह्यंगुष्ठं वस्ति उच्यते ॥ १ ॥ अंगुष्ठमात्रं हृदयं त्र्यंगुष्ठं हृदयं
स्मृतं ॥ एकांगुष्ठकटिर्ज्ञेयो द्वौ नाभिस्ति द्वौ च गुह्यकं ॥ उरू जंघे च पादौ च चतुस्त्र

केर्यथाक्रमं॥ अरण्यवयवाल्पे तयाशिकैः परिकीर्तिताः॥३॥ मूलादष्टांगु
लं सक्तां अग्राच्च द्वादशांगुलं॥ अंतरा देवयोनिः स्यात्तत्र मध्योकृताशनः॥
मूलाद्दशुल मुत्सृज्य आग्रात्सार्धांगुलद्वयं॥ योनिमध्ये पुनर्मानं तत्र मध्या
कृताशनः८॥ दैर्घ्यं चतुर्विंशत्यंगुलानि॥ प्रथमं॥१॥ द्वितीयं२ तृतीयं३ चतु॰४
पंचमं५ षष्ठं६ सप्तमं७ अष्टमं८ नवमं९ दशमं१० एका॰११ द्वा॰१२ त्रयो॰१३
चतु॰१४ पंच॰१५ षोडशं१६ सप्तदशं१७ अष्टादशं१८ एकोन॰१९ विंश॰२०
एक॰२१॥ द्वाविं॰२२ त्रयोविं॰२३ चतुर्विंशति२४ विस्तारेण षडंगुलानि॥
प्र॰ द्वि॰ तृ॰३ च॰ पंच॰ षष्ठं६ उत्सेधे चतुरंगुलानि॰ प्र॰ द्वि॰ तृ॰ च॰॥ एवं द्वयोररण्योर्मानं॥ ततो अवयवकल्पनं॥ मूलसमीपयदंगुलं पादौ १ अंगुलत्रयं जं
घे अंगु॰४ उरू अं॰२ देवयोनिः अंगुले२ वस्तिअं॰१ कटिअंगु॰ उदरं अं॰१ हृदयं
अंगु॰२॥ वक्षः अं॰१॥ ग्रीवा अंगु॰ मुखं१॥ कर्णौ अं१ नेत्रे अंगु॰ एकं शिरः इत्सधा
११ रारण्योः अवयवकल्पनं॥ ततः अरणी पूजनं॥ गंधादिभिः पूजयेत्॥ ततः सायं सधा

मुपास्य आवसथ्याहोमं कृत्वा गार्हपत्यागारे जंबध्नाति ॥ अजेभावो वा ॥ चातु
ष्प्राश्यपचनं इच्छया ॥ तत्र अनडुहे रोहिते चर्मणि प्रस्तृतित्रय परिमाणेन पात्रेण
चतुष्कृत्वा मानं ओदनं पचनं ॥ उद्वासनं मध्ये गर्तकरणं ॥ घृतासेकः तेन घृता
क्तानां अश्वत्थीनां तिसृणां समिधामाधानं ॥ समिधाग्निमिति प्रथमां ॥ सुस
मिद्धायति द्वितीयां ॥ तं त्वेति तृतीयां ॥ उपत्वेति जपः ॥ ...हिजामोदमक्षणं ॥
राद्भुरस्ते ब्रह्मोदन पैषः ॥ वरदानं चतुर्णा पि ॥ त्रिरात्र पक्षे रुच्छया यजमानभाज
नं गोमयपिंडैः काष्ठैर्वा अग्नेर्धारणं ॥ इच्छया जागरणं ॥ ततो न्येवाससी परिधा
य परिहृते वाससी प्रक्षाल्य चिवारोपणार्थं विस्तार्यते ॥ प्रातः परिदधीयतां ॥ अरु
णोदयकाले ध्वर्युः स्नात्वा तं स्थापितमग्निं स्वयत्नेनापक्रमेत् ॥ ततो यजमानः आ
वसथ्यहोमं कुर्यात् ॥ गार्हपत्यस्थाने परिसमूहनोपलेपनं ॥ उल्लेखनं ॥ उद्धरणं ॥
अभ्युक्षणं अभ्युक्षणकाले गार्हपत्ये स्थाने यजमानस्य कुशैरन्वारंभः ॥ अन्ये
तु हिरण्यादीनामनिर्वापपक्षे अनन्वारंभणं एव अभ्युक्षणं करोति ॥ इच्छया
संभारनिर्वापः ॥ संभारपक्षे गार्हपत्यस्य मध्ये हिरण्यशकलनिधानं ॥ तस्य
आसमंतात् उषानिर्वापः ॥ उषानामक्षार मृत्तिके सर्पः ॥ ततः आखूत्कर उप

राम

किरातिउपरिवा हिरण्यं ॥ ततो पंचाशच्छर्कराभिः ॥ परिवेष्टनं ॥ अथवा हिरण्या
वारवूकरशर्कराणां अनिर्वापः ॥ ततो गार्हपत्यस्य पुरस्तात्त्वा सुविक्रमेषु एका
दशसु द्वादशसु मसावा आहवनीयस्थानं कल्पयन्ति वितस्तीयन दक्षिणतः ॥
दक्षिणाग्निस्थानं कल्पति ॥ ततो आहवनीयस्थाने ॰ गार्हपत्यस्यस्थानवत्स
रिसमूहनादि आरवूकरांतं पूर्ववत् ॥ आहवनीये त्रिः सप्तति शर्कभिः परिवेष्टनं
ततो दक्षिणाग्निस्थापरिसमूहनादि शर्करावेष्टनांतं पूर्ववत् ॥ दक्षिणाग्नेो द्वाविं
शतिशर्करा ॥ तथाच परिशिष्टे पंचाशर्करा दद्यात् ॥ पूर्वे द्यौ त्रिसप्ततिः दक्षि
णे च खर रश्मि द्वात्रिंसत्पंच पंच च ॥ अजविमोकः ॥ अग्नीध्रे यजमानः दद्यात् ॥ अ
ध्वर्युः वाचंयच्छ पूर्णाहुतेः इति यजमानं प्रेष्यति सपत्निको यजमानः पूर्णाहुत्यंतं
वाग्यतो भवति अग्निमंथनयाति प्रेष्याध्वर्यो ॥ अग्निमंथनमग्नीध्रः ॥ अथवा
न भावे ज्ञान् अनुद्रहपक्षे प्रैषाभावः ॥ पुरस्तात्प्रयजुर्वास्थिते अग्निमंथनं ॥ ऋषभो
वा उदिते अनुदिते वा मंथनं कार्यं ॥ उद्धरणं तदिते नियमेनागार्हपत्यस्यपश्चिम
१२ तः तत्र प्राग्ग्रीवमुपरि कोमलकृष्णाजिनमास्तीर्य तदुपरि रूवाग्राग्रामुत्तराग्रावाअ

धराराणिं निधाय ॥ ततः उत्तरारणेः ईशानप्रदेशात् अष्टांगुलंप्रमथ्यां छिद्राचात्र
प्रोतनेत्रेण त्रिर्वेष्टयित्वा अधरारणेः मूलप्रदेशात्केनवांगुलोपरि अर्द्धांगुलमि
तप्रदेशे पूर्वभागे दक्षवा निः ॥ तत्र मंथनं कार्यं प्राङ्मुखो यजमानो यंत्रं गृण्हाति प्र
(पङ्मुखी पत्नी प्रदक्षिणक्रमेण मंथनं करोति ॥ प्रत्यङ्मु खोध्वर्युर्मंथनं करोति
रातिकर्कः ॥ पत्नीबाहुवे सव्यक्रमेण म थति पत्न्याः सामर्थ्या दन्योवमंथनंकरोति
अग्नौ जाते सति ब्रह्मदानं ॥ अध्वर्यवे ॥ अथवा सर्वेभ्यो ऋत्विग्भ्यो यजमानो वरं
दद्यात् अथवा मनसा विचार्य कर्मसमाप्तौ दद्यात् तमग्नी कर्परे प्रदीप्तकृत्वा ॥
नलिकया यजमान निर्गच्छता मुखश्वासेन अग्निं फुत्करोति सोभिश्वासः ॥ ॐ
प्राणं मम्रते दधे इति मंत्रेण सकृत् ॥ ततो नलिकया वन्हिज्वालायां ॥ उर्ध्वश्वा
सेन मुखमध्ये ग्रहणं उच्छ्वासः ॐ अमृतं प्राण आदधे इति मंत्रेण तत्तो धूर्युः ॥
अथ पदार्थो द्वितीयादिप्रयोगे न भवति ॥ दारुभिर्ज्वलंतमादधाति ॥ यज्ञिय
काष्ठैर्ज्वलंतमग्निं ॥ ॐ भूर्भुव आदित्यानां हादेवानां व्रतपते व्रतेनादधइति
मंत्रेणाग्निस्थापनं ॥ यदि अंगिरसो यजमानः ॥ तर्हि अंगिरसां देवानां०

यदि भार्गवो यजमान तदा भृगूणां वा देवानां ॥ इति मंत्रेण विशेषः ॥ भृग्वंगि
रगणाव्यतिरिक्तानामादित्यानां वा देवानां इत्यूर्ध्वर्षि ॥ रथंतरं गायेति प्रैषः रथंतरं
गायेति प्रेष्यति ॥ गानमध्वर्यो ब्रह्मा वा वेदयोग्यत्वात् युक्ताहात् ॥ वाशब्दः पूर्वोक्त
पक्षनिरासार्थः ॥ ब्रह्मैव सामानि गायति नाध्वर्युः कुतः वेदयोगात् ब्रह्मणो हि
साम वेदेन योगोऽस्ति ग्रहण धारण रूपेण ॥ यतास्त्रिवेदस्यैव ब्रह्मत्वाधिकारः अतः
ब्रह्मैव सामानि गायति इति सिद्धं ॥ अथ रथंतरसाम ॥ आभित्वा शूर णोनोनुमो वा
॥ ओं दुग्धाई व धेनव ईशान मस्य जगतः सुवा २३४ र्दशम् ॥ आ ५ ई शानमा २३ इन्द्रा ३
सूस्थुः २३४ षा ३० वा ६ हाउवा ॥ ईशोवा ॥ नामिंद्र तस्थुषो न त्वावा ७ अन्यो दिवियः न
पा २३ र्थिवाः ॥ न जातो न ३ जा ३ नाई ष्या २३४ ता ॥ ३० वा ६ हानुवा ॥ न जोवा ॥ तो न
जानिष्यते अश्वायंतो मघवन्नि ॥ द्रवा ॥ २३ जिनाः ॥ गव्यं तस्त्वा २३ हा ३ वामा २३४
हा ॥ ३० वा ६ हाउ ॥ वाजस ॥ प्रथमम् ॥ अध्वर्युः ॥ इध्मस्य द्वाविंशतिकाष्ठस्य त्रिधा
बद्धस्य त्रिभिर्यूनैर्बद्धस्य अग्रदेशे उपयमनी प्रक्षिप्य बुध्नस्य गार्हपत्ये श्रयणं ॥
इध्मस्य ग्रहणं आहवनीय देशेगमनं पुरस्तादध्वस्य गमनं ॥ वामदेव्यं गायेति

प्रैषोध्वर्युः॥ तज्ज्ञानं ब्रम्हणाः॥ का ३६ यानश्वा ३ यित्रा ३ आभुवातू॥ उती॥ सदावृधः
सखा ३ होहोयि॥ कयाशचा यिष्ठयोहि ३ । हुम्मा २ वा ३ २ र्त्तो ३ ६ हायि॥ का १ स्ता॥ सत्यो
३ मा ३ दानाम्॥ माहिष्ठोमात्सादंधसा॥ आ ३ होहायि॥ दृढाचिदा॥ रुजोहा ३ हुम्मा २ वा २
सा ३ ओ हायि॥ आ ६ भीषुणाः ३ सा ३ खीनाम् आ॥ विताजरायितृणाम्॥ ३ हाहायि॥ श
ता २ ३ म्भावा॥ २॥ सियोहि ३ हुम्मा २ ता २ या ३ ६ हायि॥ अश्व पदेनसंभारस्क्रमणं॥ प्रा
ने यनं॥ आवर्त्य अश्वस्य स्थापनं॥ बृहद्गायतिप्रैषोध्वर्युः॥ तज्ज्ञानं ब्रम्हणाः॥ आहो
यिहा मिाद्धि हवामहा ३ ए सातौवाजास्याकारा २ ३ ४ वाः तुवा ३ ४ औ हो वा॥ वृत्राइषु
वाइन्द्रासा ३ १ तपतिंना २ ३ ४ नाः। ताक्काष्टाः ३ ४ औ होवा॥ सूर अर्वा २ ३ ४ ताः॥ उहुवा ६
हाउवा औ हो इतुवा ३ मे॥ काष्ठासू अर्वा॥ २ ३ ४ ताः सत्वा ३ ४ औ होवा॥ नश्चाइन्द्रवा॥ ज्यो
हा ३ १ स्तधृष्टः ६ या॥ महस्तावा॥ नोअद्रा २ ३ ४ इवाः गामा ३ ४ औ होवा॥ श्चुवा
६ रथाई। यामा ३ १ राद्रसंका २ ३ ४ इरा। सत्राबाजा॥ ३ ४ औ होवा। ना २ जा ई ना २
जिग्यू २ ३ ४ साइ॥ उहुवा ६ हाउवा। हस्। अग्निना॥ पदं द्विरुपस्पृश्यपतत्तीयेनाद
ध्याति द्वितीयेन प्रथमेनवा॥ ॐ भूर्भुवः स्वः आदित्यानां त्वा देवानां व्रतप

तेत्रतेनादधे ॥ इति मंत्रेण आहवनीयस्थाने आग्निं निदधाति ॥ ततो यजमानः ॥
पुरस्तात्परिक्रम्य पश्चिमपूर्वार्द्धं गृहीत्वा द्यौरिव भूम्ना सा आह ॥ ॐ आयं गौः पृश्नि० स्वः ॥ अं
तश्च० दिवम् ॥ त्रिंश० राजा० द्युभिः नवा कुर्यात् ॥ गार्हपत्याद्दक्षिणाग्निमादधाति ॥
सभ्यस्थाने पंचभूसंस्कारान्कृत्वा ॥ तदेवारणी पुनस्तथैव सभ्याधानार्थं मथनीं मं
थ्य ॥ तं जातमग्निं सभ्यस्थरे स्थापयेत् ॥ सभ्यस्थापना नानंतरं यजमानऋत्वि
जः ॥ प्रातिगां दिमध्वमिति प्रैषमाह ॥ ॐ गां दीमध्वम् ॥ ततो ब्रह्मादयो ऋत्विजः विह
रस्योत्तरतः आच्यो मुखं कांशपात्रं निधाय ॥ पंचशलाकान् हस्ते गृहीत्वा कपर्दीन्
वासमेन जयामिविधमेन जीयसे कांस्यपात्रोपरि चतुर्वारं प्रक्षिपंति ॥ ऋत्विज ए
व न यजमानः ॥ प्रक्षणे कर्तृत्वम् ॥ अस्य सभ्याधानाख्यस्य कर्मणः सांगसि
ध्यर्थं अस्मिन्नृते इमां पणीकृतां गां ब्रह्मादिभ्यो ऋत्विग्भ्यः समविभागेनाहं संप्र
ददे ॥ अतः प्रभृति सभ्य धार एवं प्रातरुपस्थानं च याव जीवं कर्तव्यं ॥ शौ तं गाय
ति प्रैषो ध्वर्युः ॥ तद्धानं ब्रह्मणः अभि प्र वः सुरा । ध सा ३४ ओ हो वा ॥ आ ईन्द्रमर्च । यथा
विदा २७४ २ ॐ हायोजरीतध्य ॥ माधा २७ ॥ वा । पुरू २ वा २३४ स्रः । सहस्रेणा ई । वा

शा।हु म्मा ३ क्षा २ तां २३४ औ हो वा॥ सहस्रे पोवाशि। क्षता २३४ औ हो वा।।साहस्रेण।
वशा ३ क्षता २३४ ॐ हा। शतानीकव। प्रजा २३ ३ गा।। तिध्या २ कू २३४ याहतिवृत्राणि २
दा। हुम्माई। भूरे षा २३४ औ हो वा। हति यो वृत्रा णि दा। सुषा ३४ औ हो वा हं ति वृत्रा
णि दाशुषा। ३४ ३। ॐ ६ हा। गिरे रिव प्रा रा सा २३ आस्यपा २ राम्वा २३४ ३ दत्राणि पुरु ३
भो हुम्माई। जार सा २३४ औ औ हो वा। वा २३४ सू: इति रोतसाम अथ वारनतीयं।। अ
ध्वन वा औ हो हाई। वा रा। २। वा। २३४। न्नाम्। व● दाध्या २३४ हाई। अग्नाइ न्नमा ३४
औ हो वा। इ हा २३४। हाइउ कुवाभी: सम्राजा। नाम ध्वरा।। ३४ औ हो वा। इ हा २३४ दा
ई औ हो ३१ २३४ णाम् एहि जा ६ हा। स घान: सा औ हो हा। ३। नू: शावा २३४ सापृथु
प्रा २३४ हा। गोमा सुम्रा २३४ औ हो वा। इ हा २३४ हा। राउ हुवा २३४ वा: मीढा ६ आ
स्माकंबभू ३४ औ हो वा। इ हा २३४ हाई औ हो ३१ २३४ यात्। यहि या ६ हा। सनो हुरा औ हो
होई। वा अ सा २३४ आनिमाता २३४ औ हो वा। इ हा २३४ हा ई। औ हो ३१ २३४ यू:। एहि
षा ६ हा। हो ५ इ उ ५ यज्ञा य ज्ञियं ग्रायेति प्रैषाधर्षु:।। तद्धानंब्रम्हण:।। यज्ञा २ य
शा ३ वो ३ ग्नाया ३।। आ इ रा इ रा चा ३ दक्षा ३ सा ३ प्रप्री २ वयममृतं जाता २३

वाकु माइ।दा३।साम्।मार्यं मित्राई सुबा३।प्रायाम्।मा यित्राई सू३रगाई सी ३धामू३
ज्मो नपा २ तई सहिनया २३ माकु म्माइ।स्मा ३ षृः॥ दोशोमहन्मदा २ तया३।दाशो माहा
म्यो३दाता३याइ।भुवद्वाजे २ ष्वविताषृ २३ बातू कुम्माइ।वा।ईइ।३ तत्राताततनू २ना३।वा
२३४५॥६ ततोध्वर्युः सर्वानग्नीन्प्रदक्षिणीकृत्य आहवनीयपुरस्तात्संस्थितमध्वं अ इ वो
हं३दगुदसृजेत् नेतरथावृत्तिः॥ ऋतुनक्षत्रसामवपनवा तु प्रारभ्य जागरपो ध्मर्
वर्ध्यन्वारंभणवृत्तीं सार्पराज्ञीनर्वा कुर्यात्॥ एतानि एतानि ऋतुनक्षत्रादीन्यग्न्या
धेयेकुर्यान्नकुर्याद्वेति विकल्पः॥ सर्वैर्विहितप्रतिषिद्धत्वात्॥ अग्निहोत्रे चतुष्टी
६ श्रुतः पूर्णाहुत्यंते॥ ततोध्वर्युर्गार्हपत्यादुत्तरतउपावि॥ आज्यस्थाल्यामाज्यनि
रुप्याज्यं गार्हपत्ये धिश्रित्य दर्भैः प्रथमं स्रुवस्य संमार्गः ततः स्रुचः॥ स्रुवं
स्रुचं च संमृज्योद्वास्योष्णया वेक्ष्य गृहीत्वा चोरध्वाए वई सर्वत्र स्वाहेति॥ ततो
ध्वर्युः।अधिश्रित्य॥ खादिरं स्रुवं वैकंकतीं स्रुचं च दर्भैः संमृज्य॥ आज्यो
द्वासनं॥ उत्तरतः।कुशातरुणाभ्यामुत्पवनं।अवेक्षणं॥ स्रुवेणाज्यग्रहणं॥ या
१८ वद्भिः स्रुवैः कृत्वा पूर्णा स्रुग्भवेत्॥ द्वादशाभिः रिक्तके॥ उपरि समिधं कृत्वा तदग्न्यपा

गातरंकृत्वा ॥ यथानस्कंदेतथापूर्वाग्निस्वंगृहीत्वा हाहवनीयंगत्वा प्राङ्मीत्वनसमि
धमाधायउपविश्यदक्षिणंजानुवाच्य यजमानान्वारब्धोध्वर्युजुहोति तूष्णीं ॥
साहारसेनेनइदंप्रजापतयेननमम ॥ ततोयजमानोवरंददामिइति संप्रदानमेत्रेण
॥ वाग्विसर्गंकरोति । वरदानमध्वर्यवे ॥ ब्रह्मार्युक्याः ॥ सर्वक्याबाकूर्यात् ॥ ततो
ध्वर्युस्तूष्णीं अग्निहोत्रहोमंतस्मिन्नेवविहारेपयसा कूर्यात् ॥ यजमानः ॥ सं
चरप्रवेशंकृत्वा स्वस्थाने उपविश्यतूष्णींअनभ्य ॥ वाग्यमनं ॥ पत्नीचयथादे
शेउपविशति ॥ ततोध्वर्युः ॥ कूर्चसादनंकुशान्वा ॥ परिस्तरणं ॥ पर्युक्षणंध्वा
शसहितंगार्हपत्यात् ॥ गोदोहप्रेषवर्जं ॥ उत्तरोगान्कृत्वा पूर्वेणात्से अधि
श्रित्य ॥ अवज्योत्यस्रुवेणासिच्यापः पुनरवज्योत्य ॥ त्रिरुद्वासयति ॥ वैकंक
तंस्रुवंकृस्रुवं ॥ प्रतप्य ॥ पाणिनासंमार्ष्टि ॥ पुनःप्र तप्य ॥ उन्नयनप्रैषः ॥
अभ्यासंख्यामात्रेण । ततश्चतुर्गृहीतंगृहीत्वा ॥ उपरिसमिधंधारयन् ॥ मुखमात्रे
धारयन् ॥ मध्येनिगृह्योर्ध्वोपविश्य ॥ आहवनीयेतूष्णींसमिधमोधाय ॥
अग्निंध्यात्वातूष्णींपूर्वाहुतिहोमः इदमग्नयेनमम ॥ इत्याद्योयजमानेनस

वैसागममानासिकाः कर्तव्याः शेषं पात्रांतरे तत्रैव स्थापयेत् ॥ पुनर्गार्हपत्यावे
दुतरत स्थित्वा ॥ तथैव चतुर्गृहीत्वा समिदाधान पूर्वकं तूष्णीं पूर्वाहुतिहो
मः निधाय स्रुचं गार्हपत्यमवेक्ष्य ॥ उभयोः शेषं समासिच्य तत्रैणोत्तराहुति
होमः ॥ द्विप्रकंपनं ॥ निधानं ॥ तूष्णीं निमार्ष्टि ॥ दक्षिण उत्तरां उत्तानं ॥
उदकोपस्पर्शः ॥ गार्हपत्ये एकैकं स्रुवं पात्रांतरे उन्नीय ॥ द्वितीयं स्रुवं ॥ गृहीत्वा
प्रथमोन्नीतं न सह प्रथमाहुतिं तूष्णीं जुहोति ॥ ततश्चतुर्थं गृहीत्वा द्वितीयोन्नी
तं न सह तूष्णीमेव द्वितीयामाजुहोति ॥ एवं दक्षिणाग्नौ होमः ॥ अन्यामिकया
द्विः प्राश्य ॥ उत्सृज्य निर्लेढ्याचाम्य ॥ उपउसिंचति त्रिवा रतूष्णीं कूर्चस्थाने
त्रिनिषिंचति ॥ स्रुक् स्रुवं प्रतप्य निधाय गार्हपत्य पूर्वं तूष्णीं ॥ समिध्यादान
नोपस्थानं पर्युक्षणं वाशावर्जं गार्हपत्यात् ॥ यज मानः वाच्यं ॥ आचम्य ॥
संचर विमोकं कुर्यात् ॥ एवं तूष्णीं ॥ अग्निहोत्रहोम ॥ इति समाधानं ॥
त्रिरात्रं नियमब्रह्मचर्यं ॥ अग्निधारणं पयोहोमः ॥ अग्निसमीपे शयनं ॥ र
क्षिपक्षेतन्नूह विषुततो यजमानः ॥ अथ पूर्वेद्युः पुण्यतिथौ ॥ ॐ तत्सप्तमे
१९

वौ इदमग्नये स्विष्टकृते० षट् दक्षिणा पक्षे इष्टि द्वयस्य सप्तम यसीः द्वादशपक्षे त्रयो
दश भूयसीः चतुर्विंशतिपक्षे एकोनपंचाशद्गावो दक्षिणा॥ गोरसीति विशेषः॥
इमाः गाव प्राति०रस्यतां मूहने ॐ अग्नेः पवमानस्य० नुज्पतिमनु॥० ॐ अग्निः
पवमानः न०मि॥ सूक्तवाके अग्निरि० सोमइ० अग्निः पवमानः उ० इ० ६० ह० अजुष
तमहोज्यायः अकेल देवा आज्यपा इत्यादि॥ शेषंप्र कृतिवत्॥ इति प्रथमा इष्टिः
॥१॥ अथ द्वितीया॥ तस्मिन्नेव विहारे॥ प्राणायामादि संकल्पं विष्यते॥ ॐ तत्स
परमे० ये अधीनांगतया द्वितीययापावकया तनुहविषेज्याहं यक्ष्ये
अग्न्यन्वाधाने॥ अग्निं पावकमष्टाक० न॥ अग्निं शुचिमष्टाकं० रोन॥ सद्योहं य
क्ष्ये॥ पंचदशो० भूयसि सहिता षट् द्वादश चतुर्विंशतिर्वा गावो दक्षिणा॥ यकेचनं
ॐ ममा० मत्० नब्रह्म वरणं वाचस्पतिप्रैषः॥ ॐ वाचस्पते० प्रणीताप्रणयनं ग्रहणो
अग्ने पावकाय जु० मि। अग्नये शुचये जु०। प्रोक्षणोहा धिकः॥ निर्देशाः॥ इदम
ग्नेः पावकस्य इदमग्नये शुचये॥ प्राणदानेन। ॐ यस्ते प्रा० भूतामग्नेः पावकं गच्छस्व
०द॥ ॐ यस्ते प्रा० भूतामग्निं शुचिं गच्छ० द० अवाहनेन॥ अग्निमग्नऽआ० सोममाह।
अग्निं पावक आवह॥ अग्निं शुचिं आ० देवां आज्यपां इत्यादि॥ उत मे प्रयाज।

११

राम

ये० स्वाहाग्निः स्वाहा सोमः सा अग्नियावकं पांशु स्वाहा॥ अग्निं शुचिं स्वाहा॥ दे
वा आज्यपाः॥ इदमग्नये सोमायाग्नये पावकायाग्नये शुचये देवेभ्यो आज्य०
आज्यभागान्तरतिवृध्यन्तंता वाज्यभागौ॥ अग्नयेनु० अग्निः प्रत्ने० सोम
गी० प्रधानयागे॥ अग्नये पावकाय उपांशु॥ अनुब्रूहि॥ अग्नेपावक रोचिषा
ज॥ येयजा० ॐ अग्निं पावकं॥ सनः पावक बिश्वनं ॐ उपांशु वौषट् उअग्न
येशुचये० उपांशु० अनु० अग्निः शुचिर्व्रततमः॥ शुचिर्विप्रः शुचिकविः॥ शुचि
रोचत आहुत उ पांशु ०ॐ मू उपां० अग्निं शुचिं उपांशु० येयजा० पु० अग्निः शु
चिमुदग्ने शुचयस्तव शुक्रा भ्राजंतईरते॥ तवज्योतींष्यर्चयो० वौषट्॥ अग्निं
चयौ संयाज्ये॥ अग्नये स्विष्टकृतेनु ब्रूहि॥ आग्नि मै नाग्निः समिध्यते कविर्गृ
हपतिर्युवा॥ हव्यवाड्जुह्वास्यौमु॥ ये० ग्निं स्विष्टकृत० अग्नेः पावकस्य उपांशु प्रिया
उग्नेः शुचेः प्रि० देवा० जुषतां हविस्त्वमग्ने अग्निनाविप्रो विप्रेण सन्सता॥ स
खा सखा समिध्यसा उ३ वौषट्॥ इदमग्नये स्विष्टकृतेन मम॥ दक्षिणादाने०॥ प्र

जापत्येभागिस्थोर्जस्थान्यय स्था प्राणापानौमे पात समानव्यानौमे पातौदा
नव्यानौमे पातौगावस्थोर्जं मयिधत्ताक्षितयस्य मामेक्षध्वम मुत्रामुष्मिंलोक
इहच॥ अस्याः पावकेष्ठेः समृध्यर्थं रमाः भूयसी सहिताः षट् गावो दक्षिणा
॥ ब्रह्मादिभ्यो रू०दद्दे॥ जूहने॥ ॐ अग्नेः पावकस्याग्नेः पावकस्या[illegible]वे
रज्जिति म० माहाप्रि॥ ॐ अग्निः पावकोग्निः शुचिस्तमपनुतादयमयंन्मोहा
मि॥ सूक्तवाके॥ अग्निरि० सोमस्र दर्ध अग्निपावकः उपांशु इदंहविः अजुषता
वावृधतेः॥ महोज्जायसः॥ अक्रमं॥ अग्निशुचिः॥ उपांशु इदं हविः॥ अ० म० अ० देवा
आज्यपा इत्यादिशेष प्रकृतिवत्॥ इतिद्वितीया॥ अथतृतीया॥ यजमानः देशाका
लौस्मृत्वा ॐ तत्सत् परमेश्वरप्रीतये श्रौताध्यानांगतयातृतीययादित्येष्ट्याहं
यक्ष्ये॥ संकल्पोद्धरणांपघट् सामिधोगरहिता अग्न्यन्वाध्यानम०वा॥ आदित्यंचरु
णा॥ सद्योहयक्ष्ये॥ सप्तदशोवज्रः व्रीहिभिर्यागः॥ ममा० पक्षः उत मे० पाय
नं॥ धेनुर्दक्षिणापात्रासादने॥ कपालोपवेषउद्धरण पात्रीणामभावः॥
शम्यादृषदुपलकुक्कुटाहाननार्थमेवासादनं॥ ग्रहणे॥ ॐ देवस्य० अदि
१८ त्यैजुष्टं॥ रुष्णामि प्रोक्षणेहाधिकः॥ प्राणदाने॥ ॐ सस्तेप्राण० भ्रहा[illegible]

तिगाच्छ० समस्तेशानवज्जणप्रात्पमवबाध्ये समस्ता सामिधेन्याः ॐ भूर्भुवःस
रों त्रवोवाजा० रणे चित्रेरा स्तुमीमहो ३॥ पृथुपाजा ऽ अमर्त्यो घृतनिर्णिक् स्वा
हुतः॥ अग्निर्यज्ञस्य हव्यवो ॥ तं सबाधोयत स्रुच इत्थाधिया यज्ञवंतः॥ आचकु
रग्निमूतये ३ समिद्धो अग्न आहुतेत्यादि॥ आवाहने॥ अग्निमग्न आ ३ वह॥ सोम
मा ३ वह। अदितिमा ३ वह॥ देवां आज्यपां इत्यादि॥ उत्तमप्रयाजे॥ ये यजामहे स्वा
हाग्निं स्वाहा सोमं स्वाहा अदितिं स्वाहा॥ देवा इत्यादि॥ वितन्वंतावाज्यभागौ॥ अ
ग्नयेनुब्रूहि॥ त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः त्वया यज्ञं वितन्वते ३ म्॥ सो
मायानुब्रूहि सोम यास्ते मयोभुव ऊतयः संति दाशुषे॥ ताभिर्नोविता भव ३ म्॥ प्रधा
नयागे॥ अदित्यै उपांशु॥ अनुब्रूहि उच्चैः॥ सुत्रामाणं पृथिवीं द्यामनेहसं सु
शर्माणमदितिं सुप्रणीतिं॥ दैवीं नावं स्वरित्रामनागसमस्रवंतीमारुहेमा
स्वस्तये॥ ॐ ३ म्॥ अदितिं यज॥ ये यजामहे॥ अदितिं महीमू षु मातरं सुव्रता
नामृतस्य पत्नीमवसे हुवेम॥ तुविक्षत्रामजरंतीमुरूचीं सुशर्माणमदितिं सुप्रणी
तिं वौषट्॥ इदं अदित्यै न मम॥ विरात्रो संयज॥ अग्नये स्विष्टकृतेनुब्रूहि॥ प्रत्न०

वाजोम्॥ अग्निऽ॰ मिन॰ र्मे॰ सामस्य॰ अदितेऽ॰ उपां॰ प्रिया धामा॰ देवा॰ जुषतां॰
हविरिमो अग्ने वीततमा निरुवाज स्वाद्धि देवतातिम॥ प्रतिनऽईं॰ सुरभीणि
तूद कौऽ॥ इदमग्नये स्वष्टकृते नमम॥ सर्वं वहूहिपिमपनुमंत्रणं॥ ब्रूहणे॥ अदि
तेरुजि नि॥ मोहामि॥ ॐ अदितिस्त्वमपनुदतां॥ मा वोहामि स्रूक्तवाके अग्निः॰ सो
मन॰ अदिति॰ उपांसुऽदऽ॰ हविः अजुः॰ महे॰ अकत॰ देवा॰ शेषं प्राकृतं इतिवृतीया
कृतस्य इष्टयंता धाना स्वा स्यकर्मणः सांगता सिध्यर्थं ग्रात ब्राह्मणान् भोजयिष्ये
तेन यज्ञपुरुषः॥ प्रियतां न मम॥ अथ त्रिरात्रनियमाः त्रिरात्रमनृतं न वदिष्ये॥ त्रि
रात्रमतिथीन् कालप्राप्तान् न निराकरिष्ये॥ त्रिरात्रमहमुदकं विहारे कृतकस्मै
चिन्न दास्ये॥ नक्तापि या स्योमि॥ त्रिरात्रं ब्रह्मचर्यं करिष्ये॥ आत्मन् विहारे त्रिरा
त्रमहमग्नीन् धारयि ष्ये॥१॥ त्रि॰ महमग्निहोत्रं पयस्याहोष्ये॥ आधाना
हिताग्नि समये त्रि॰ महमधः शायिष्ये एते नियमा यजमानेन पत्न्या च नियमः॥
कार्याः॥१॥ एतेषां त्रिरात्रनियमानां मध्ये यजमानापत्नीकुतश्चिद् प्रमादा
१९ द्वा एकं नियमधर्मं विस्मरति न करोति॥ तदा आनादिष्ट प्रायश्चित्तं होतव्यं॥

अध्वर्यवे दक्षिणाग्नो ॥ तदनंतर मग्नीध्रे ॥ आधानकर्मांगतया विहितमिमम
जतुष्यंमहं संप्रददे ॥ तान्विष्णु यीभूतं हिरण्यं वा ॥ ततः भो अध्वर्यो ॥ आधानक
र्मांगितया विहितेतत्कर्मप्रीति ॥ ब्रह्मासिध्वर्य्यं इमे अथ रोतरासोमेवासससीतु
मममंसंप्रददे ॥ पत्नी च सीयेददाति ॥ तोर्हुत्रपरिध्यानकुर्तत्ततस्तेषां
यजमानः स्वकर्मपरिपूरणाय परमेश्वरप्रीतये गोभूहिरण्यवस्त्रादिरूपां कैं
विद्दक्षिणां ब्राह्मणेभ्यो ददाति ॥ तदशक्तो भक्षास विनयं साष्टांगप्रणाममात्रं
करोति ॥ ततस्ते विप्राः सप्ता: आशीर्वचनं ब्रूयुः अथानांगकर्मलोपनिमित्तंप्रायि
श्चित्तं लिख्यते ॥ त्रिरात्रमध्ये गार्हपत्यः शांतो भवति तदा भूसंस्कारपूर्वकं गार्हप
य निर्मथ्य स्थापयति ॥ गार्हपत्ये आज्यसंस्कारं कृत्वा समिधपूर्वकं दक्षिणाग्नो
भुवः स्वाहेति यजुर्वेद प्रायश्चित्तं स्रुचा जुहोति ॥ इदं वायवे न मम ॥ ततः सकृद्गृही
तेन स्रुचा त्वं नो अग्ने इत्यादि पंचभिः पंचवारं पोमंत्रै पृथक्पंचाहुतीर्जुहोति ॥ य
थादैवततथायागं ददाति ॥ इति गार्हपत्ये आज्यसंस्कारं कृत्वा चतुर्गृहीत्वा समि
त्पूर्वकं दक्षिणाग्नो भूः स्वाहेति पूर्ववत् पश्चादाहवनीये भूसंस्कारपूर्वकं गार्ह

पत्नां ह्याहवनीयमुद्धरति ॥ त्रिरात्रमध्ये दक्षिणाग्नौ नष्टे तेभ्य संस्कारपूर्वकं उद्धर
णं पूर्ववत् ॥ आज्यसंस्कारं समिधं पूर्वं भुवः स्वाहेति दक्षिणाग्नौ पूर्ववत् जुहोति ॥
अथ युगपत् ॥ आग्नित्रयेषु नष्टे तर्हि अनादिष्टं तदाभ्य संस्कारान् कृत्वा निष्कृय ग
र्हपत्यस्थापयेति ॥ ततो आहवनीयदक्षिणाग्निरवरे मृभ्युद्धिपूर्वक क्रमेणोद्धरणं
पूर्ववदाज्यं संस्कृत्य च तुष्ठीहोत्रा समिधं पूर्वं दक्षिणाग्नौ भुवः स्वाहेति जुहोति
पंच वारुणं कंच ॥ एवमग्नित्रयेषां तेपि एकमेव ॥ अनादिष्टं होतव्या इति त्रि
रात्रमध्ये अग्नित्रयेषां ते प्रायश्चित्तानि इति अग्निहोत्रहोमप्रथमाधाने
समाप्त ॥ इति श्रौताधानप्रथमप्रयोगः ॥ पुस्तक शुद्ध पंचमि शके १७४८
श्रीगणेशायनमः